द्वे चार्धिते । तयोर्मूले । आद्यं भुजोनखाङ्कांशानां दलस्य ज्या द्वितीयं भुजाढ्यखाङ्कांशानां दलस्य । एवमतोऽप्यन्याः । तद्यथा अष्टमात्षोडशं १६ ज्यार्धम् । षोडशाच्चतुर्थं ४ विंशं च २० । चतुर्थाद्दशमं १० चतुर्दशं च १४ । एवं सर्वाण्यपि ।

प्रकारान्तरमाह । यद्दोर्ज्ययोरन्तरमित्यादि । इष्टदोर्ज्ययोर्यदन्तरं कोटिज्ययोश्च यत्तयोर्वर्गैक्यमूलस्य दलं भुजयोरन्तरार्धस्य ज्या भवति । एवमन्ययोरन्यान्याः । यथैका किल चतुर्थी ४ । अन्याष्टमी ८ दोर्ज्या । ताभ्यां द्वितीया २ सिध्यति । द्वितीया चतुर्थीभ्यां प्रथमे १ त्यादि ।

तथा दोःकोटिज्ययोरन्तरवर्गदलस्य मूलं दोःकोटिभागान्तरार्धस्य ज्या स्यात् । यथाष्टमी ८ दोर्ज्या । षोडशी १६ कोटिज्या । ताभ्यां चतुर्थी ४ स्यादित्यादि ।

अथ मूलग्रहणक्रियया विनापि दोःकोटिभागान्तरज्यानयनमाह । दोर्ज्याकृतिरित्यादि । दोर्ज्यावर्गस्त्रिज्यार्धेन भक्तः । तस्य त्रिज्यायाश्च विवरं दोःकोट्यन्तरस्य ज्या स्यात् । कानिचिदेवमत्र ज्यार्धानि साध्यानि । तद्यथा । यत्र किल त्रिंशज्ज्यार्धानि तत्र त्रिज्यार्धं दशमम् १० । तत्कोटिज्या विंशतितमम् २० । शरवेदांशज्या पञ्चदशम् १५ । षट्त्रिंशदंशज्या द्वादशम् १२ । तत्कोटिज्या अष्टादशं १८ ज्यार्धम् । अष्टादशभागानां ज्या षष्ठम् ६ । तत्कोटिज्या चतुर्विंश २४ मिति । क्रमोत्क्रमज्या
दित्यादिना पूर्वोक्तप्रकारेण दशमात् पञ्चमम् ५
पञ्चविंशम् २५ । एवं द्वादशात् षष्ठं ६ = ं =
तृतीयं ३ सप्तविंशं २७ च । अष्टादशात् भेद

एतान्येवानेन प्रकारेण सिध्यन्ति नान्यानि। अत्र उक्तं कानि-चिदेवमत्रेति। यद्दोर्ज्ययोरन्तरमित्यादिप्रकारेण। अतोऽत्र पञ्चम-५ मेका दोर्ज्या नवम ९ मन्या। आभ्यां यद्दोर्ज्ययोरन्तरमित्या-दिना प्रकारेण भुजयोरन्तरार्धस्य ज्योत्पद्यते। तच द्वितीयं २ ज्यार्धम्। तत्कोटिज्याष्टाविंशम् २८। आभ्यां क्रमोत्क्रमज्या कृति-योगमूलादलमित्यादि प्रकारेणाद्यं १ चतुर्दशं १४ च। एवमन्या-श्चतुर्दश सिध्यन्ति।

अथ ज्याभावना। सा च द्वेधा। एका समासभावना। अन्या-न्तरभावना। तदर्थमाह। स्वगोऽङ्गेषुषडंशेनेत्यादि। यत्र किल व-सुत्रिवेदाग्नि ३४३८ तुल्या त्रिज्या नवतिश्च ज्यार्धानि तत्र ता-वदुच्यते। तत्र मूलभूतज्याना मध्ये काचनेष्टा भुजज्या तत्कोटि-ज्या च पृथक् स्थाप्या। भुजज्या स्वनवषड्पुरस ६५६९ विभा-गेन रहिता कार्या। कोटिज्या तु दशगुणा त्रिसप्तपञ्चभि ५७३ र्भा-ज्या। तयोरैक्यं तदग्रज्या। अन्तरं पूर्वज्या स्यात्। यथा त्रिज्यार्धं त्रिंशत्संख्याकं ज्यार्धम् ३०। ततः समासभावनयैकत्रिंशत्संख्यम् ३१। तस्माद्द्वात्रिंशत्संख्यमित्यादि। अन्तरभावनयात्वेकोनत्रिंश २९ मष्टाविंश २८ मित्यादि। पूर्णं दोर्ज्यां कोटिज्यां त्रिज्या च प्रकल्प्य प्रथमं १ खण्डमेवं षष्टिः ६० स्यात्।

अथ यदि सैव त्रिज्या चतुर्विंशतिर्ज्यार्धानि तदर्थमाह। कोटि-जीवाशताभ्यस्तेत्यादि। अत्रापि त्रिज्यार्धमष्टमं ८ ज्यार्धं सा भुजज्या। षोडशं १६ कोटिज्या सा कोटिज्या शतगुणा गोदस्र-तेषि १५२९ भाजिता। या तु दोर्ज्या सा तु निजेन सप्ताङ्गवेदा-१४६७ शेन हीना कार्या। यदि तयोरैक्यं क्रियते तदा नवमं ९

द्वे चार्धिते । तयोर्मूले । आद्यं भुजोनखाङ्कांशानां दलस्य ज्या द्वितीयं भुजाढ्यखाङ्कांशानां दलस्य ।एवमतोप्यन्याः । तद्यथा अष्टमात्पोडशं १६ ज्यार्धम् । पोडशाच्चतुर्थं ४ विंशं च २० । चतुर्थाद्दशमं १० चतुर्दशं च १४ । एवं सर्वाण्यपि ।

प्रकारान्तरमाह । यद्दोर्ज्ययोरन्तरमित्यादि । इष्टदोर्ज्ययोर्यदन्तरं कोटिज्ययोश्च यत्तयोर्वर्गैक्यमूलस्य दलं भुजयोरन्तरार्धस्य ज्या भवति । एवमन्ययोरन्यान्याः । यथैका किल चतुर्थी ४ । अन्याष्टमी ८ दोर्ज्या । ताभ्यां द्वितीया २ सिध्यति । द्वितीया चतुर्थीभ्यां प्रथमे १ त्यादि ।

तथा दोःकोटिज्ययोरन्तरवर्गदलस्य मूलं दोःकोटिभागान्तरार्धस्य ज्या स्यात् । यथाष्टमी ८ दोर्ज्या । पोडशी १६ कोटिज्या । ताभ्यां चतुर्थी ४ स्यादित्यादि ।

अथ मूलग्रहणक्रियया विनापि दोःकोटिभागान्तरज्यानयनमाह । दोर्ज्याकृतिरित्यादि । दोर्ज्यावर्गस्त्रिज्यार्धेन भक्तः । तस्य त्रिज्यायाश्च विवरं दोःकोट्यन्तरस्य ज्या स्यात् । कानिचिदेवमत्र ज्यार्धानि साध्यानि । तद्यथा । यत्र किल त्रिंशज्ज्यार्धानि तत्र त्रिज्यार्धं दशमम् १० । तत्कोटिज्या विंशतितमम् २० । शरवेदांशज्या पञ्चदशम् १५ । पट्त्रिंशदंशज्या द्वादशम् १२ । तत्कोटिज्या अष्टादशं १८ ज्यार्धम् । अष्टादशभागानां ज्या षष्ठम् ६ । तत्कोटिज्या चतुर्विंश २४ मिति । क्रमोत्क्रमज्याकृतियोगमूलादित्यादिना पूर्वोक्तप्रकारेण दशमात् पञ्चमम् ५ । तत्कोटिज्या पञ्चविंशम् २५ । एवं द्वादशात् षष्ठं ६ चतुर्विंशं २४ च । षष्ठात् तृतीयं ३ सप्तविंशं २७ च । अष्टादशान्नवम ९ मेकविंशं २१ च ।

ज्यार्धं भवति। यदन्तरं तदा सप्तमं ७ स्यात्। एवं समासभावनया नवमाद्दशमं १० दशमादेकादश ११ मित्यादि। तथान्तरभावनया सप्तमात् षष्ठं ६ षष्ठात्पञ्चम ५ मित्यादि। एवं प्रथमं १ सप्तांशोनतत्त्वदस्रमितं भवति। अथवा पूर्णं० दोर्ज्यां त्रिज्यां च कोटिज्यां प्रकल्प्य साध्यते तथापि तदेव। ततः समासभावनया द्वितीयादीन्यखिलानि भवन्ति। अथवा त्रिज्यां दोर्ज्यां प्रकल्प्य पूर्णं कोटिज्यां च प्रकल्प्य साध्यते तदा त्रयोविंश २३ मुत्पद्यते तस्मादन्तरभावनया द्वाविंशम् २२। ततोऽप्येकविंशम् २१। एवमखिलान्यपि निष्पद्यन्ते।

अथ भावनामाह। चापयोरिष्टयोरित्यादि। इष्टयोश्चापयोर्ये दोर्ज्ये ते कर्मभूमौ स्थाप्ये। तयोरधस्तात्कोटिज्ये च। ततः प्रथमकोटिज्या द्वितीयदोर्ज्यया गुण्या। ततो द्वितीयकोटिज्या प्रथमदोर्ज्यया गुण्या। द्वे अपि त्रिज्यया भाज्ये। फलयोः समासश्चापैक्यभुजस्य ज्या भवति। अन्तरं चापान्तरस्य ज्या भवति। इयं सिद्धज्यातोऽन्यज्या साधने वासना। तद्यथा। तुल्यभावनया प्रथमज्यार्धस्य प्रथमज्यार्धेन सह समासभावनया द्वितीयम् २ द्वितीयस्य द्वितीयेनैवं चतुर्थ ४ मित्यादि। अथ तुल्यभावनया। द्वितीयतृतीययोः समासभावनया पञ्चमम् ५। अन्तरभावनया प्रथमं स्यादित्यादि।

अथेष्टज्यासार्धं ज्याज्ञानार्थमाह। आद्यज्या चापभागानामित्यादि। यावद्भिरंशैरेका ज्या लभ्यते त आद्यज्या चापांशाः प्रतिभागज्यकाविधिरिति। त्रिगमपञ्चाग्नि ५७३ भक्तेत्यादिना प्रथमेनैकभागस्य ज्यामानीय तद्भावनातो भागद्वयस्यैवं ते